णोभलिआ इति सिद्धम् । निद्रा णेद्दा णेद्रा, 'द्रे रो वा' ( १०४ ) इति वा रलोपः, 'इत एत्०' ( १२१ ) इति एत्वम् । हे णेद्दे इत्यादि ।

अत् पथि-हरिद्रा-पृथिवीषु ॥ १६५ ॥

एषु इतो अत् स्यात् । हरिद्रा हलद्दा हलद्रा, 'हरिद्रादीनां०' ( ६० ) इति रेफस्य लः । जिह्वा जीहा, 'ईत् सिंह०' ( ५० ) इति ईत्वम्, "सर्वत्र०" ( ३४ ) इति वलोपः । मुक्ता मोत्ता, 'उत ओत्' ( ५५ ) इति ओत्वम् । घृणा घणा, 'ऋतोऽत्' ( १२० ) इति अत् । कृशरा किसरा । कृत्या किच्चा, 'त्य-थ्य०' ( ७१ ) इति चः । कृपा किवा, 'पो वः' ( ८५ ) इति वः । त्रिष्वपि 'ऋतोऽत्' ( १२० ) इति अत्वे प्राप्ते ऋष्यादित्वाद् इत्वम् । वेदना विअणा वेअणा, 'क-ग०' ( १० ) इति दलोपः, 'नो णः' ( ९ ) इति णः ।

यमुनाया मस्य ॥ १६६ ॥

लोपः स्यात् । यमुना जउणा, 'आदेर्यो जः' (३९) इति जः ।

चन्द्रिकायां मः ॥ १६७ ॥

कस्य मः स्यात् । चन्द्रिका चन्दिमा, 'सर्वत्र०' ( ३४ ) इति रलोपः । पताका पडाआ, 'प्रतिसर०' ( ३३ ) इति तस्य डः, 'क-ग०' ( १० ) इति कलोपः ।

छायायां हः ॥ १६८ ॥

यस्य हः स्यात् छाया छाहा । रमणीया रमणिज्जा, 'उत्तरीया०' ( ८६ ) इति जः, 'शेषादेशः' ( ३५ ) इति द्वित्वम् । सटा सढा । राधा राहा । सभा सहा । शोभा सोहा । परिखा फलिहा, हरिद्रादित्वाद् लः, 'परुष०' ( ६३ ) इति फः, 'ख-घ०' ( ५९ ) इति हः । दोला डोला, 'दोला-दण्ड०' ( ९४ ) इति डः । निशा णिसा ।

स्नुषायां ण्हः ॥ १६९ ॥

षस्य ण्हः स्यात् । स्नुषा सोण्हा, तुण्डरूपत्वाद् उत ओत्वम् । उल्का उक्का, 'सर्वत्र०' ( ३४ ) इति ललोपः । वार्त्ता वत्ता, 'र्त्तस्य टः' ( ११५ ) इति प्राप्ते धूर्त्तादित्वान्न । वर्त्तिका वत्तिआ, पूर्ववत् । सन्ध्या संझा, ...

इति चः। मिथ्या मिच्छा। विद्या विज्जा। क्षुणा छुणा। उक्षा उच्छा। मक्षिका मच्छिआ। कक्षा कच्छा। रक्षा रच्छा। पञ्चस्वपि अक्ष्यादित्वात् छः 'वर्गेषु०' (३७) इति चः। क्षमा छमा खमा, 'क्षमा-वृक्ष०' (६७) इति छत्ववैकल्प्यात् पक्षे 'ष्क-स्क०' (५६) इति खः। 'श्च-त्स-प्सां च्छः' (१२३) पश्चिमा पच्छिमा। विवत्सा विइच्छा (?)। लिप्सा लिच्छा। जुगुप्सा जुउच्छा, 'प्रायः' (१०) इत्युक्तेर्लोपाभावपक्षे जुगुच्छा। मूर्च्छा मुच्छा, "वर्गेषु०" (३७) इति चः।

आङो ज्ञादेशस्य ॥ १७० ॥

'म्न-ज्ञ०' (१२७) इति जातो यो णादेशः तस्य आङः परस्य द्वित्वं न स्यात्। आज्ञा आणा। सेवा सेव्वा सेवा, 'सेवादिषु' (१३२) इति द्वित्वम्।

क्लिष्ट-श्लिष्ट-रत्न-क्रिया-शार्ङ्गेषु तत्स्वरवत् पूर्वस्य ॥ १७१ ॥

एषु युक्तस्य विप्रकर्षः स्यात्। विप्रकर्षितव्यस्य विप्रकर्षे जाते यः पूर्वो वर्णो निरर्थकस्तस्य विप्रकर्षितव्यस्वरता स्यात्। क्रिया किरिआ।

अः क्ष्मा-श्लाघयोः ॥ १७२ ॥

युक्तस्य विप्रकर्षः स्यात्, पूर्वस्याकारः तत्स्वरता च। क्ष्मा खमा। विप्रकर्षितव्यस्य दीर्घत्वादीर्घत्वे प्राप्ते ह्रस्वो अकारो विधीयते। 'ष्क-स्क०' (५६) इति खः। श्लाघा सलाहा, 'श-षोः०' (४४) इति सः, 'ख-घ०' (५९) इति हः।

ज्यायामीत् ॥ १७३ ॥

युक्तस्य विप्रकर्षः स्यात्, पूर्वस्य ईकारः। ज्या जीआ अत्राप्याकारे प्राप्ते ईकारो विधीयते। ज्येत्यत्र विप्रकर्षकरणात् पूर्वम् 'अधो म-न-याम्' (४०) इति यलोपः, ततो घचेत् 'कग०' (१०) इति। माला माला। शाला साला।

आदीतौ बहुलम् ॥ १७४ ॥

स्त्रियामकारान्तादातः स्थाने आत् ईत् इत्येतौ बहुलं स्तः। सहमाना सहमाणा सहमाणी। वेपमाना वेवमाणा वेवमाणी। हरिद्रा हलद्रा(द्दा) हलद्दी। सूर्पनखा सुप्पणहा सुप्पणही। छाया छाहा छाही। का की। जा जी। ता ती। प्रश्नः पण्ही। समृद्धिः समिद्धी सामिद्धी, 'आ समृद्ध्या०' (४३) इति वा आकारः, ऋष्यादित्वाद् इः, 'सु-भिस्०' (१३८) इति दीर्घः। अभिजातिः आहिआई अहिआई 'ख-घ०' (५९) इति हः।

ष्टस्य ठः ॥ १७५ ॥

ष्ट इत्यस्य ठकारः स्यात् । गृष्टिः गिट्ठी । दृष्टिः दिट्ठी । सृष्टिः सिट्ठी । चतुर्ष्वपि ऋष्यादित्वाद् इत्वम् । आकृतिः आइदी; ऋष्यादित्वाद् इः; आउदी, ऋत्वादित्वाद् उः । सुकृतिः सुइदी, ऋष्यादौ कृतिशब्दपाठात् । संवृतिः संवुदी । प्रतिपत्तिः पदिवत्ती, 'प्रतिसर०' (३३) इति तु न, ऋत्वादिपाठेन बाधात् । वसतिः वसही, 'वसति-भरत०' (८१) इति हः ।

यष्ट्यां लः ॥ १७६ ॥

आदेर्लः स्यात् । 'आदेर्यो जः' (३९) इति जापवादः । यष्टिः लट्ठी । कीर्त्तिः कित्ती, 'र्त्तस्य टः' (११५) इति टे प्राप्ते धूर्त्तादित्वाद् न । मूर्त्तिः मुत्ती । वितर्दिः विअड्डी । विच्छर्दिः विच्छड्डी । उभयत्रापि 'गर्दभ०' (?) इति डः, 'शेषा-ऽऽदेश०' (३५) इति द्वित्वम् । कुक्षिः कुच्छी, अक्ष्यादित्वात् छः । स्थितिः थिई । मनस्विनी मणंसिणी, समृद्ध्यादित्वाद् वा आकारः, वक्रादित्वादनुस्वारः ।

ईदूतोर्ह्रस्वः ॥ १७७ ॥

सम्बुद्धौ । [ हे मनस्विनि ] हे माणंसिणि । मनस्विनीम् माणंसिणिं, 'अमि ह्रस्वः' (१५८) इति ह्रस्वः । वल्ली वेल्ली, शय्यादित्वाद् एकारः ।

चतुर्थी-चतुर्दश्योस्तुना ॥ १७८ ॥

अनयोस्तुशब्देन सह आदेः अतः ओत्वं वा स्यात् । चतुर्थी चोत्थी चउत्थी । चतुर्दशी चोद्दही चउद्दही । 'दशादिषु०' (१००) इति हः । पृथिवी पुहवी, ऋत्वादित्वाद् उः, 'अत् पथि०' (१६५) इति अः ।

उः पद्म-तन्वीसमेषु ॥ १७९ ॥

पद्मशब्दे तन्वी इत्येवंरूपेषु च युक्तस्य विप्रकर्षः स्यात्, पूर्वस्य उकारः । गुर्वी गरुई, मुकुटादित्वाद् अः । शफरी सभरी, 'श-षोः सः' (४४) 'फो भः' (९१) । अङ्गुरी अङ्गुली, 'हरिद्रादीनां०' (६०) इति रेफस्य लः ।

बिसिन्यां भः ॥ १८० ॥

आदेः । बिसिनी भिसिणी । स्त्रीलिङ्गनिर्देशः किम् ? बिसं । षष्ठी छट्ठी, 'षट्-शावक०' (९९) इति छः । सप्तमी सत्तमी । कर्त्तरी कत्तरी, "र्त्तस्य टः"(११५) इति प्राप्ते धूर्त्तादित्वाद् न । लक्ष्मी लच्छी, अक्ष्यादित्वात् छः ।

पः स्यात्। रुक्मिणी रुप्पिणी। श्रीः सिरी। ह्रीः हिरी, 'इः श्री-ह्री-
(३२) इति विप्रकर्ष-यौ। लघ्वी लहुई, 'ख-घ०' (५९) इति हः, 'उ
पद्म०' (१७९) इति विप्रकर्षः। तन्वी तणुई। नदी नई। हे नइ। पृष्ठं पुट्ठी
अक्षि अच्छी। वधूः वहू। हे वहु इत्यादि।

मातुरात् ॥ १८२ ॥

मातृशब्दसम्बन्धिन ऋकारस्य आत् स्यात्। माता माआ। हे मा
इत्यादि।

॥ इति अजन्ताः स्त्रीलिङ्गाः ॥

लोपोऽरण्ये ॥ १८३ ॥

आदेरतः।

सोर्बिन्दुर्नपुंसके ॥ १८४ ॥

नपुंसके तिष्ठतः सोः अनुस्वारः स्यात्। अरण्यं रण्णं।

इज्जस्-शसोर्दीर्घश्च ॥ १८५ ॥

नपुंसके वर्त्तमानयोः जस्-शसोः इदादेशः स्यात्, पूर्वस्य दीर्घश्च
अरण्यानि रण्णाइं। अरण्यं रण्णं। अरण्यानि रण्णाइं। अरण्येन रण्णेण
पुंवत्। हे अरण्य हे रण्ण, 'नाऽऽमन्त्रणे०' (२५) इति निषेधाद् बिन्दुर्न,
किन्तु 'अन्त्यस्य०' (२६) इति सोर्लोपः।

ओ बदरे देन ॥ १८६ ॥

अत्र दकारेण सह आदेरत ओत्वं स्यात्। बदरं बोरं इत्यादि।

उदूखले द्वा वा ॥ १८७ ॥

अत्र दूशब्देन सह आदेः ओद् वा स्यात्। उदूखलं ओखलं उदूहलं।

उलूहले ल्वा वा ॥ १८७A ॥

उलूहलशब्दे लू शब्देन सह आदेः उकारस्य ओकारो वा स्यात्।
उलूहलंओहलं। इति पाठान्तरम्।

उदूतो मधूके ॥ १८८ ॥

अत्र मधूकशब्दे ऊकारस्य उत् स्यात्। मधूकं महुअं।

अद् दुकूले वा लस्य द्वित्वम् ॥ १८९ ॥

दुकूलशब्दे ऊकारस्य अकारो वा स्यात्, तत्सन्नियोगेन च लस्य द्वित्वम्। दुकुलं दुअल्लं दुऊलं।

एन्नूपुरे ॥ १९० ॥

नूपुरशब्दे ऊकारस्य एत् स्यात्। अत्र 'आदेः' इति प्रयोजनाभावाद् नानुवर्त्तते। नूपुरं णेउरं। ऋणं रिणं, 'ऋ रिः' (?) इति रि। हृदयं हिअयं, ऋष्यादित्वाद् इः। वृन्दावनं वुंदावणं, 'ऋतोऽत्' (१२०) इति प्राप्ते ऋत्वादित्वाद् उः।

ऌतः क्लृप्त इलि ॥ १९१ ॥

क्लृप्तशब्दे ऌकारस्य इलिः स्यात्। क्लृप्तं किलित्तं। त्रैलोक्यं तेल्लोक्कं, 'ऐत् एत्' (६९) इति एत्, सेवादित्वात् द्वित्वम्, द्वित्ववैकल्प्यात् पक्षे तेलोक्कं। शैत्यं सेत्तं। स्वैरं सइरं। वैरं वइरं। द्वयोरप्यैकारस्य 'दैत्यादिषु०' (६८) इति अइः।

दैवे वा ॥ १९२ ॥

दैवशब्दे ऐकारस्य अइरित्यादेशो वा स्यात्।

नीडादिषु च ॥ १९३ ॥

एषु अनादौ तिष्ठतो हलो वा द्वित्वम्। दैवं देव्वं देवं दइवं। नीड स्रोत प्रेम व्याहृत जनक यौवन दैव इत्यादयः नीडादिः।

इत् सैन्धवे ॥ १९४ ॥

अत्र एकारस्य इकारः स्यात्। एत्वापवादः। सैन्धवं सिन्धवं।

ईद् धैर्ये ॥ १९५ ॥

अत्र एकारस्य ईत् स्यात्। एत्वापवादः।

तूर्य-धैर्य-सौन्दर्या-ऽऽश्चर्य-पर्यन्तेषु रः ॥ १९६ ॥

एषु र्यस्य रः। धैर्यं धीरं। तूर्यं तूरं। सौन्दर्यं सुन्देरं, 'उत् सौन्दर्यादिषु' (७६) इति उः। आश्चर्यं अच्छेरं, 'श्च-त्स०' (१२५) इति छः। पर्यन्तं पेरंतं। त्रिष्वपि शय्यादित्वाद् एत्वम्। यौवनं जोव्वणं, 'औत ओत्' (७३) इति ओत्, 'आदेर्यो जः' (३९) इति जः, नीडादित्वात् द्वित्वम्, 'नो णः०' (९) इति णः।

आच्च गौरवे ॥ १९७ ॥

गौरवशब्दे आ अउ ओ इत्येते स्युः। गौरवं गारवं गउरवं गोरवं इत्यादि। गर्भितं गब्भिणं, 'गर्भिते णः' (८०) इति णः।

डस्य च ॥ १९८ ॥

डकारस्यायुक्तस्य अनादिभूतस्य लः स्यात्। दाडिमं दालिमं। 'प्रायः' इत्यनुवृत्तेः क्वचिद् दाडिमं इत्यपि।

ठो ढः ॥ १९९ ॥

अयुक्तस्य अनादिभूतस्य ठस्य ढः स्यात्। जठरं जढरं। कठोरं कढोरं

अंकोठे ल्लः ॥ २०० ॥

अत्र ठस्य ल्लः स्यात्। अंकोठं अंकोल्लं। सफलं सभलं, 'फो भः' (९१) इति भः। सुखं सुहं, 'ख-ग०' (५९) इति हः। करुणं कलुणं हरिद्रादित्वाद् रेफस्य लः।

श्मश्रु-श्मशानयोरादेः ॥ २०१ ॥

अनयोरादेर्वर्णस्य लोपः स्यात्। श्मशानं मसाणं।

चौर्यसमेषु रिअं ॥ २०२ ॥

एषु र्यस्य रिअं इत्यादेशः स्यात्। चौर्यं चोरिअं। शौर्यं सोरिअं 'औत ओत्' (७३) इति ओत्। वीर्यं वीरिअं।

पर्यस्त-पर्याण-सौकुमार्येषु ल्लः ॥ २०३ ॥

एषु र्यस्य ल्लः स्यात्। पर्यस्तं पल्लत्थं, 'स्तस्य थ' (५७) इति थः 'शेषादेश०' (३५) इति द्वित्वम्। पर्याणं पल्लाणं। सौकुमार्यं सोअमल्लं मुकुटादित्वाद् अः।

पत्तने ॥ २०४ ॥

युक्तस्य टः। पत्तनं पट्टणं। क्षीरं छीरं, अक्ष्यादित्वात् छः। श्लक्ष्णं सण्हं। तीक्ष्णं तिण्हं। 'ह्न-स्न०' (४९) इति ण्हादेशः।

चिह्ने धः ॥ २०५ ॥

युक्तस्य धः स्यात्। ण्हापवादः। चिह्नं चिन्धं, प्रायिकमेतत्, चिण्हं

ष्पस्य फः ॥ २०६ ॥

तालवृन्ते ण्ठः ॥ २०७ ॥

युक्तस्य ण्ठः स्यात् । तालवृन्तकं तालवेण्ठअं तलवेण्ठअं ।

आम्र-ताम्रयोर्बः ॥ २०८ ॥

अनयोरनादेः वः स्यात् । आम्रं अंबं । ताम्रं तंबं । क्लिष्टं किलिट्ठं । रत्नं रअणं । 'क्लिष्ट-श्लिष्ट०' ( १७१ ) इति विप्रकर्षः तत्स्वरता च ।

उदुम्बरे दोर्लोपः ॥ २०९ ॥

अत्र दु इत्यस्य लोपः स्यात् । उदुम्बरं उंबरं ।

कालायसे यस्य वा ॥ २१० ॥

अत्र यस्य वा लोपः स्यात् । य इति विशिष्टग्रहणम् । कालायसं कालासं कालाअसं, लोपाभावपक्षे 'क-ग०' (१०) इति यकारमात्रलोपः ।

मलिने लिनोरिलौ वा ॥ २११ ॥

मलिनशब्दे लि इत्यस्य इः स्यात्, न इत्यस्य लः स्याद् वा । मलिनं मइलं मलिणं ।

गृहे घरोऽपतौ ॥ २१२ ॥

गृहशब्दस्य घर इत्ययमादेशः स्यात्, न तु पतौ परे । गृहं घरं । अपताविति किम् ? गृहपतिः गहवई । पीतं पीअं । धनं धणं ।

वृन्दे वो रः ॥ २१३ ॥

वृन्दशब्दे वात् परः स्वार्थे रो वा स्यात् । व्रंदं वंदं ।

आलाने न-लोः ॥ २१४ ॥

अत्र नकार-लकारयोः स्थितिपरिवृत्तिः स्यात् । आलानं आणालं ।

दाढादयो बहुलम् ॥ २१५ ॥

दाढा इत्यादयः शब्दाः बहुलं निपात्यन्ते । चातुर्यं चाउलिअं । पृष्ठं पुट्ठं । इदानीं एण्हिं । दुहिता दिद्धी । मण्डूकः मण्डूरो । कमलं कंदोट्टो । गोदावरी गोला । ललाटं लडालं णिडालं । आकृतिगणोऽयम् । 'सु-भिस्०' ( १३८ ) इति दीर्घे प्राप्ते –

न नपुंसके ॥ २१६ ॥

क्लीबे प्रथमैकवचने दीर्घो न । वारि वारिं । वारीणि वारीइं । पुनस्तद्वत् । शेषं पुंवत् ।

युक्तस्य ठः स्यात्। अस्थि अट्ठिं। सक्थि सत्थिं। अक्षि अच्छिं। गुरु गरुअं, मुकुटादित्वाद् अः। श्मश्रुः मंसू, 'श्मश्रु-श्मशानयोः०' (२०१) इति शकारलोपः अश्रु अंसू, वक्रादित्वाद् अनुस्वारः। मधु महुं।

॥ इत्यजन्ता नपुंसकलिङ्गाः ॥

*

अनड्वान् अणड्डओ, विष्णुवत्। चतुर्शब्दो नित्यं बहुवचनान्तः

चतुरश्चत्तारो चत्तारि ॥ २१८ ॥

चतुःशब्दस्य जसा शसा च सह एतावादेशौ स्याताम्। चत्वारः चत्तारो चत्तारि। चतुरः चत्तारो चत्तारि। चतुर्भिः चऊहिं। चतुर्भ्यः चऊहिंतो चऊसुंतो। चतुर्णां चउण्हं। चतुर्षु चऊसु।

किमः कः ॥ २१९ ॥

स्पष्टम्। कः को। के के, 'सर्वादेः०' (१३५) इति एत्वम्।

इदम्-एतत्-किं-यत्-तद्भ्यष्टा इणा वा ॥ २२० ॥

एभ्यः परः टा इणा इति वा स्यात्। केन कइणा केण।

त्तो दो ङसेः ॥ २२१ ॥

किं-यत्-तद्भ्यो ङसेः त्तो दो इत्येतावादेशौ वा स्याताम्। कस्मात् कत्तो कदो का कादो कादु काहि। केभ्यः काहिंतो कासुंतो।

किं-यत्-तद्भ्यो ङस आसः ॥ २२२ ॥

एभ्यः परस्य ङस आस इत्यादेशो वा स्यात्। कस्य कास कस्स।

आम एसिं ॥ २२३ ॥

इदम्-एतत्-किं-यत्-तद्भ्यः परस्य आम एसिं इत्यादेशो वा स्यात्। केषां केसिं काणं।

ङेर्हिं ॥ २२४ ॥

किं-यत्-तद्भ्यो ङेः सप्तम्येकवचनस्य हिं इत्यादेशो वा स्यात्। कस्मिन् कहिं कस्सिं कम्मि कत्थ।

आहे इआ काले ॥ २२५ ॥

किं-यत्-तद्भ्यः परस्य ङेः काले वाच्ये आहे इआ इत्येतावादेशौ वा स्याताम्। कदा काहे कइआ कहिं कस्सिं कम्मि कत्थ। केषु केसु।

इदम इमः ॥ २२६ ॥

इदम्शब्दस्य इम इत्यादेशः स्यात् सुपि। अयं इमो। इमे इमे। इमं इमं। इमान् इमा। अनेन इमेण इमिणा, 'इदमेतत्०' (२२०) इति इणादेशः। एभिः इमेहिं। अस्मात् इमादो इमादु इमाहि। एभ्यः इमाहिंतो इमासुत्तो।

स्स-स्सिमोरद् वा ॥ २२७ ॥

इदम्शब्दस्य अ इत्यादेशो वा स्यात् स्से स्सिमि च। अस्य अस्स इमस्स। एषां इमेसिं इमाणं।

ङेदन हः ॥ २२८ ॥

इदम्शब्दस्य दकारेण ङेः ह इत्यादेशो वा स्यात्। पक्षे यथाप्राप्तम्।

न त्थः ॥ २२९ ॥

इदमः परस्य ङेः त्थ इत्यादेशो न स्यात्। अस्मिन् अस्सिं इमस्सिं इह इमम्मि। एषु इमेसु।

राज्ञश्च ॥ २३० ॥

राजन्शब्दस्य आ इत्ययमादेशः स्यात् सौ। राजा राआ, 'अन्त्यस्य०' (२६) इति सोर्लोपः।

जस्-शस्-ङसो णो ॥ २३१ ॥

राज्ञः परेषामेषां णो इत्यादेशः स्यात्।

आ णो-णमोरङसि ॥ २३२ ॥

णो-णमोः परयोः राज्ञो जस्य आ स्यात्। राजानः राआणो।

आमन्त्रणे वा बिन्दुः ॥ २३३ ॥

राजन्शब्दस्यामन्त्रणेऽनुस्वारो वा स्यात् सौ। हे राजन् हे राअं हे राअ। राजानं राअं। 'शेषो०' (१३७) इति अदन्तवद्भावः।

शस एत् ॥ २३४ ॥

राज्ञः परस्य शस ए इत्यादेशः स्यात्। राज्ञः राए राआणो।

ङसश्च द्वित्वं वाऽन्त्यलोपश्च ॥ २३६ ॥

राज्ञः परस्य ङसादेशस्य टादेशस्य च द्वित्वं वा स्यात् अन्त्यस्य च लोपः। राज्ञा रण्णा। पक्षे–

इदद्वित्वे ॥ २३७ ॥

ङसादेशस्य टादेशस्य च द्वित्वाभावपक्षे राज्ञ इत्वं स्यात्। राइणा। राजभिः राएहिं 'शेषो०' (१३७) इत्यदन्तवद्भावः। राज्ञः राआ राआदो राआदु राआहि। राजभ्यः राआहिंतो राआसुन्तो। राज्ञः रण्णो राइणो।

आमो णं ॥ २३८ ॥

राज्ञ उत्तरस्य आमः णं इत्यादेशः स्यात्। राज्ञां राआणं। राज्ञि राअम्मि राए। राजसु राएसु।

आत्मनो अप्पाणो वा ॥ २३९ ॥

आत्मनः अप्पाण इत्ययमादेशो वा स्यात्।

इत्व-द्वित्ववर्जं राजवदनादेशे ॥ २४० ॥

आत्मनः अनादेशे राजवत् कार्यं स्यात्, [ इत्व-द्वित्वे वर्जयित्वा ] आत्मा अप्पाणो अप्पा। 'राज्ञश्च' (२३०) इति आकार उक्तः सोऽत्रापि स्यात्। आत्मनः अप्पाणो। आत्मानं अप्पं। आत्मनः अप्पणो। आत्मना अप्पणा। आत्मभिः अप्पेहिं। आत्मनः अप्पा अप्पादो अप्पादु अप्पाहि। आत्मभ्यः अप्पाहिंतो अप्पासुन्तो। आत्मनः अप्पणो। आत्मनां अप्पाणं। आत्मभिः (°त्मनि?) अप्पे अप्पम्मि। आत्मसु अप्पेसु।

ब्रह्माद्या आत्मवत् ॥ २४१ ॥

ब्रह्मन् युवन् इत्यादयः शब्दाः आत्मवत् साधवः स्युः। ब्रह्मा बह्मा बह्माणो। युवा जुवा जुवाणो। अध्वा अद्धा अद्धाणो। एवमादयो लक्ष्यानुसारतो ज्ञेयाः।

न-सान्त-प्रावृट्-शरदः पुंसि ॥ २४२ ॥

नश्च सश्च न-सौ अन्ते यस्य इति विग्रहः। एते पुंसि प्रयोक्तव्याः

अनयोर्यः तकारः तस्य सकारः स्यात् सौ। सः सो। ते ते। तं तं। तान् ता। तेन तइणा तेण। तैः तेहिं।

तद ओश्च ॥ २४४ ॥

तदः परस्य ङसेः ओ इत्ययमादेशो वा स्यात्। तस्मात् तओ तत्तो तदो तादो तादु ताहि। तेभ्यः ताहिंतो तासुत्तो।

ङसा से ॥ २४५ ॥

तदो ङसा सह से इत्यादेशो वा स्यात्। तस्य से तास तस्स।

आमि सिं ॥ २४६ ॥

तद आमा सह सिं इत्यादेशो वा स्यात्। तेषां सिं तेसिं ताणं। तस्मिन् तहिं तस्सिं तम्मि तत्थ। तदा तहे तइआ। तेषु तेसु। एवं यः जो।

एतदः सावोत्वं वा ॥ २४७ ॥

एतद ओत्वं वा स्यात् सौ। एषः एसो एस, नित्यप्राप्तविभाषेयम्। एते एते। एतं एतं। एतान् एता। एतेन एदिणा एदेण। एतैः एदेहिं।

त्तो ङसेः ॥ २४८ ॥

एतदः परस्य ङसेः त्तो इत्ययमादेशो वा स्यात्।

त्तो-त्थयोस्तो लोपः ॥ २४९ ॥

एतच्छब्दस्य तकारस्य लोपः स्यात् त्तो-त्थयोः परयोः। एतस्मात् एत्तो एदादो एदादु एदाहि। एतस्मिन् एत्थ एतस्सिं एतम्मि।

पदस्य ॥ २५० ॥

—इत्यधिकृत्य।

युष्मदस्तं तुमं ॥ २५१ ॥

युष्मदः पदस्य तं तुमं इत्यादेशौ स्यातां सावा सह। त्वं तं तुमं।

तुज्झे तुम्हे जसि ॥ २५२ ॥

युष्मदः पदस्य तुज्झे तुम्हे इत्येतावादेशौ वा स्तः जसा सह। यूयं तुज्झे तुम्हे।

त्तं वाऽमि ॥ २५३ ॥

युष्मदः पदस्य त्तं इत्यादेशो वा स्यात् अमा सह। त्वाम् त्तं तुमं।

युष्मदः पदस्य वो तुज्झे तुम्हे इत्येते आदेशाः स्युः शसा सह। युष्मान् वो तुज्झे तुम्हे ॥

टा-ङ्योस्तइ तए तुमए तुए ॥ २५५ ॥

युष्मदुत्तरयोः टा ङि इत्येतयोः तइ तए तुमए तुए इत्येते आदेशाः स्युः प्रकृत्या सह। त्वया तइ तए तुमए तुए।

आङि च ते दे ॥ २५६ ॥

युष्मदः पदस्य आङा सह ते दे इत्येतावादेशौ स्तः। आङ् इति टासंज्ञा प्राचाम्।

तुमाइ च ॥ २५७ ॥

अयमपि स्यात्। ते दे तुमाइ।

तुज्झेहिं तुम्हेहिं तुब्भेहिं भिसि ॥ २५८ ॥

युष्मदः पदस्य एते आदेशाः स्युः भिसा सह। युष्माभिः तुज्झेहिं तुम्हेहिं तुब्भेहिं। अत्र 'तुज्झे तुम्हे तुब्भे' इति सुवचम् 'शिषो०' (१३७) इत्यनेन 'भिसो हिं' (१७) इति हिमादेशस्यातिदिष्टत्वात्।

ङसौ तत्तो तइत्तो तुमादो तुमादु तुमाहि ॥ २५९ ॥

युष्मद एते आदेशाः स्युः ङस्या सह। त्वत् तत्तो तइत्तो तुमादो तुमादु तुमाहि।

तुम्हाहिंतो तुम्हासुत्तो भ्यसि ॥ २६० ॥

युष्मद एतौ आदेशौ स्यातां पञ्चमीबहुवचनेन सह। युष्मत् तुम्हाहिंतो तुम्हासुत्तो। अत्रापि 'तुम्हा भ्यसि' इत्येव सुवचम्। एवम् [स्मत्]शब्देऽपि ज्ञेयम्।

ङसि तुमो-तुह-तुज्झ-तुम्ह-तुब्भाः ॥ २६१ ॥

युष्मद एते आदेशाः स्युः ङसा सह। तव तुमो तुह तुज्झ तुम्ह तुब्भ।

वो भे तुज्झाणं तुम्हाणमामि ॥ २६२ ॥

युष्मद एते स्युरामा सह। युष्माकम् वो भे तुज्झाणं तुम्हाणं।

ङौ तुमम्मि ॥ २६३ ॥

युष्मदः तुमम्मि इत्यादेशः स्यात् ङ्या सह। त्वयि तुमम्मि तइ तए तुमए तुए।

तुज्झेसु तुम्हेसु सुपि ॥ २६४ ॥

युष्मद एतौ स्यातां सुपा सह। युष्मासु तुज्झेसु तुम्हेसु।

अस्मदो हमहमहअं सौ ॥ २६५ ॥

अस्मद एते स्युः प्रथमैकवचनेन सह। अहम् हं अहं अहअं।

अहम्मिरम्मि च ॥ २६६ ॥

अस्मदः प्रथमैकवचन-द्वितीयैकवचनाभ्यां सह आदेशः स्यात्। अहं अहम्मि।

अम्हे जस्-शसोः ॥ २६७ ॥

अस्मदः अयमादेशः स्याद् जसा शसा च सह। वयं अम्हे।

मं ममं ॥ २६८ ॥

अस्मद एतावादेशौ स्याताम्। माम् अहम्मि मं ममं। 'अहम्मिरम्मि च' (२६६) इत्यतो 'अम्मि' इत्यनुवर्त्तते। 'चानुकृष्टं नोत्तरत्र' इति परिभाषया चानुकृष्टानां हं-आदीनां नानुवर्तनम्।

णे शसि ॥ २६९ ॥

अस्मदो णे इत्यादेशः स्यात् शसा सह। अस्मान् अम्हे णे।

आङि मे ममाइ ॥ २७० ॥

अस्मदः एतौ स्तः टया सह। मया मे ममाइ।

ङौ च मइ मए ॥ २७१ ॥

अस्मदः एतौ स्तः ङि-टाभ्यां सह। मया मइ मए।

अम्हेहिं भिसि ॥ २७२ ॥

अस्मदः अयं स्याद् भिसा सह। अस्माभिः अम्हेहिं।

मत्तो मइत्तो ममादो ममादु ममाहि ङसौ ॥ २७३ ॥

अम्हेहिंतो अम्हेसुन्तो भ्यसि ॥ २७४ ॥

अस्मद एतौ स्यातां भ्यसा सह । अस्मत् अम्हेहिंतो अम्हेसुन्तो ।

मे मम मह मज्झ ङसि ॥ २७५ ॥

अस्मद एते स्युः ङसा सह । मम मे मम मह मज्झ । झस्य धत्वमपीच्छन्ति केचित्, मद्ध ।

मज्झणो अम्हं अम्हाणं अम्हे आमि ॥ २७६ ॥

अस्मद एते स्युरामा सह । अस्माकम् मज्झणो अम्हं अम्हाणं अम्हे ।

ममम्मि ङौ ॥ २७७ ॥

अस्मदः अयं स्याद् ङ्या सह । मयि ममम्मि मइ मए ।

अम्हेसु सुपि ॥ २७८ ॥

अस्मदः अयं स्यात् सुपा सह । अस्मासु अम्हेसु ।

शरदो दः ॥ २७९ ॥

अत्रान्त्यहलो दः स्यात् । लोपापवादः । शरत् सरदो, 'नसान्त०' (२४२) इति पुंवद्भावः ।

दिक्-प्रावृषोः सः ॥ २८० ॥

अनयोरन्त्यस्य सः स्यात् । लोपापवादः । प्रावृट् पाउसो । रत्नमुद्र रअणमु ।

अदसो दो मुः ॥ २८१ ॥

अदसो दकारस्य मु इत्यादेशः स्यात् सुपि ।

हश्च सौ ॥ २८२ ॥

अदसो दस्य हः स्यात् सौ । असौ अह अमू । हादेशोऽयं ओत्व-आत्व-बिन्दून् परत्वाद् बाधते । अमी अमुए अमुणो । अमुम् अमुं । अमून् अमूओ । अमुना अमुणा । अमीभिः अमूहिं । अमुष्मात् अमूदो अमूदु अमूहि । अमीभ्यः अमूहिंतो अमूसुन्तो । अमुष्य अमुस्स । अमीषाम् अमुणं । अमुष्मिन् अमुस्सि अमुम्मि अमुत्थ । अमीषु अमूसु । तपः तवो । यशः जसो । सरः सरो ।

॥ इति हलन्ताः पुंलिङ्गाः ॥

रो रा ॥ २८४ ॥

स्त्रियामन्त्यस्य रेफस्य रा इत्ययमादेशः स्यात्। धूः धुरा। गीः गिरा। चतस्रः चत्तारो चत्तारि। का काआ की।

इद्भ्यः स्सा-से ॥ २८५ ॥

इकारान्तेभ्यः किं-यत्-तद्भ्यो ङसः स्सा से इत्येतावादेशौ वा स्याताम्। कस्याः किस्सा कीसे। पक्षे कीइ कीए कीअ कीआ, 'टाङस्०' (१६०) इति आदेशाः। 'आदीतौ०' (१७४) इति आकारपक्षे काइ काए। इयं इमा। युष्मदस्मदोर्लिङ्गत्रये सदृशं रूपम्। या जा जी। याः जाउ जाओ जा। यस्याः जिस्सा जीसे जीइ जीए जीअ जीआ जाइ जाए। वाक् वाआ।

न विद्युति ॥ २८६ ॥

अन्त्यस्य हल आकारो न स्यात्। विद्युत् विज्जू। दिक् दिसा, 'दिक्प्रावृषोः०' (२८०) इति सः। असौ दिक् अमू दिसा। अमूः अओ। मूशेषमूकारस्त्रीलिङ्गवत्।

॥ इति हलन्ताः स्त्रीलिङ्गाः ॥

*

नपुंसके स्वमोरिदमिणमिणमो ॥ २८७ ॥

क्लीबे सविभक्तिकस्येदमः इदं इणं इणमो इत्यादेशाः स्युः स्वमोः परयोः। इदम् इदं इणं इणमो। इमानि इमाइं। पुनस्तद्वत्। शेषं पुंवत्। किम् किं। कानि काइं। पुनरपि। शेषं पुंवत्। तत् तं, '०अनपुंसके' (२४३) इत्युक्ते न सादेशः। तानि ताइं। एतत् एदं। यत् जं। यानि जाइं। अदः अह अमुं। अमूनि अमूइं। 'न सान्त०' (२४२) इति प्राप्ते–

न शिरो-नभसी ॥ २८८ ॥

एतौ पुंसि न स्याताम्। शिरः सिरं, 'अन्त्यस्य०' (    ) इति सोर्लोपः।

॥ इति हलन्ता नपुंसकलिङ्गाः ॥

*

अधिकारोऽयम्।

हुं दान-पृच्छा-निर्धारणे ॥ २९० ॥

हुमित्ययं निपातसंज्ञः स्याद् दाने पृच्छायां निर्धारणे च।

चिअ चेअ अवधारणे ॥ २९१ ॥

चिअ चेअ इत्येतौ निपातसंज्ञौ स्तः निश्चये।

ओ सूचना-पश्चात्ताप-विकल्पेषु ॥ २९२ ॥

ओ इत्ययं निपातः सूचनायां पश्चात्तापे विकल्पे च।

इर-किर-किला अनिश्चिताख्याने ॥ २९३ ॥

त्रयो निपाताः संशयाख्याने।

हु-क्खु निश्चय-वितर्क-सम्भावनेषु ॥ २९४ ॥

हु क्खु इत्येतौ निपातौ निश्चये वितर्के सम्भावनायां च।

णवरः केवले ॥ २९५ ॥

निपातः केवलेऽर्थे।

णवरि आनन्तर्ये ॥ २९६ ॥

णवरि इति आनन्तर्ये निपातः।

किणो प्रश्ने ॥ २९७ ॥

किणो इत्ययं पृच्छायां निपातः।

अव्वो दुःख-सूचना-सम्भावनेषु ॥ २९८ ॥

अव्वो इत्ययं निपातः दुःखे सूचनायां सम्भावनायां च।

अलाहि निवारणे ॥ २९९ ॥

अलाहि इत्ययं निपातः निषेधे।

अइ वले सम्भाषणे ॥ ३०० ॥

अइ वले एतौ निपातौ वचने।

अव्वो अम्मो दुःखा-ऽऽक्षेप-विस्मापनेषु ॥ ३०१ ॥

एतौ निपातौ दुःखे आक्षेपे विस्मापने च। अत्र 'अव्वो दुःख-सूचना-सम्भावनेषु' 'अम्मो च दुःखाऽऽक्षेप-विस्मापनेषु' इति सूत्रयितुं युक्तमिति केचित्। वयं तु तत्रापरसूत्रे 'दुःख' शब्दमपि त्यजामः, पूर्वसूत्रे दुःखशब्दस्य स्वरितत्वेनानुवर्त्तनात्, 'स्वरितेनाधिकारः' इति पाणिनीये

परिभाषितत्वात् समस्तपदादेकदेशानुवृत्तिस्तु 'क्ङिति च' इत्यत्र 'न धातुलोपः'–इत्यतो धातुग्रहणानुवृत्तिवत्।

णवि वैपरीत्ये ॥ ३०२ ॥

अयं वैपरीत्ये निपातः।

सू कुत्सायाम् ॥ ३०३ ॥

सू इत्ययं निपातो निन्दायाम्।

रे अरे हिरे सम्भाषण-रतिकलहा-ऽऽक्षेपेषु ॥ ३०४ ॥

रे अरे हिरे इति त्रयः क्रमेण सम्भाषणे रतिकलहे आक्षेपे च निपाताः। अत्र च 'यथासंख्यमनुदेशः समानाम्' इत्युक्तत्वाद् यथासंख्यम्।

म्मिव-मिअ-विआ इवार्थे ॥ ३०५ ॥

म्मिव मिअ विअ इत्येते इवार्थे निपातसंज्ञकाः।

अज्ज आमन्त्रणे ॥ ३०६ ॥

अज्ज इत्ययं निपातः आमन्त्रणेऽर्थे, सम्बोधने इत्यर्थः।

शेषः संस्कृतात् ॥ ३०७ ॥

उक्तादन्यः संस्कृतादवगन्तव्यः।

इवे व्वः ॥ ३०८ ॥

इवशब्दे व्व इति निपात्यते। स इवायम् सो व्व इमो। विअ इति वक्तव्यम्, सो विअ इमो।

अपौ व्विः ॥ ३०९ ॥

अपिशब्दे व्विः इति निपात्यते। सोऽपि देव इव सो व्वि देवो व्व।

ओदवा-ऽपयोः ॥ ३१० ॥

अव अप इत्येतयोः ओ इत्यादेशो वा स्यात्। अवगाहः ओगाहो अवगाहो। अपनयः ओणओ अवणओ, 'पो वः' (८९) इति वः।

इतेस्तः पदादेः ॥ ३११ ॥

पदादेः इतिशब्दस्य यः तकारः ततः परस्य इकारस्य अ इत्यादेशः स्यात्। इति विलपन् इअ विलअंतो। त इति किम्? आदेरिकारस्य मा भव। पदादेरिति किम्? इत्लिरिति वक्तव्यम् (?)। प्रिय इति इत्यति

कृञ्परो यो द्विधाशब्दः तस्य आदेः इकारस्य ओकारः स्याद् उश्च द्विधाकृतम् दोहाइअं दुहाइअं। एवम् एअं एवं, एव एअ एव, यावदादित्वाद् वा वलोपः।

तल्-त्वयोर्दा-त्तणौ ॥ ३१३ ॥

पाणिनीये भावार्थे [ यौ ] तल्-त्वौ विहितौ तयोः क्रमेण दा त्तण इत्येतावादेशौ स्याताम्। कृष्णता कण्हदा, 'तलन्तं स्त्रियाम्' ( ) इति लिङ्गानुशासनबलात् स्त्रीत्वम्। कृष्णत्वम् कण्हत्तणं, 'त्वान्तं क्लीबम्' ( ) इति षण्ढत्वम्।

आल्विल्लोल्लालवत्तेत्ता मतुपः ॥ ३१४ ॥

तदस्यास्त्यस्मिन्नित्यर्थे विहितो मतुप् तस्य आलु इल्ल उल्ल आल वत्त इत्त इति षडादेशाः स्युः। निद्रावान् णिद्दालू। मालावान् मालाइल्लो। विकारवत् विआरुल्लं। धनवान् धणालो। गुणवान् गुणवत्तो। मानवान् माणइत्तो, 'सन्धावचा॰' (१)।

विद्युत्-पीताभ्यां वा लः ॥ ३१५ ॥

आभ्यां लप्रत्ययः स्यात्। विद्युत् विज्जुली, विद्युच्छब्दस्य स्त्रीलिङ्गत्वात् स्त्रीत्वम्, पक्षे विज्जू। पीतं पीअलं पीअं।

॥ इति श्रीज्योतिर्वित्सरसात्मजरघुनाथकविकण्ठीरव-
विरचिते प्राकृतानन्दे प्रथमः परिच्छेदः ॥ १ ॥

*

## [ अथ द्वितीयः परिच्छेदः । ]



भू सत्तायाम्।

भुवो हो-हुवौ ॥ ३१६ ॥

भूधातोः हो हुव इत्येतावादेशौ स्याताम्।

ते-तिपोरिदेतौ ॥ ३१७ ॥

धातोः परयोः ते तिप् इत्येतयोरिदेतौ स्याताम्। यथासंख्यं नेष्यते।

अत ए से ॥ ३१८ ॥

नियमार्थं वचनम्। त-तिपोः सिप्-थासोर्यौ ए से इत्येतावादेशौ विहितौ तावकारान्तादेव स्याताम्, नान्यस्मात्।

लादेशे वा ॥ ३१९ ॥

लकारादेशे परे अत एत्वं वा स्यात्। भवति=होइ हुवइ हुवए हुवेइ हुवेए।

वर्त्तमान-भविष्यदनद्यतनयोर्ज्ज ज्जा वा ॥ ३२० ॥

त्तमाने भविष्यदनद्यतने च विध्यादिषु चोत्पन्नस्य प्रत्ययस्य ज्ज ज्जा इत्येतावादेशौ वा स्याताम्। होज्ज होज्जा। लि-लो-लुट्-लङः विध्यादयः।

मध्ये च ॥ ३२१ ॥

वर्त्तमान-भविष्यदनद्यतनयोर्विध्यादिषु च धातु-प्रत्यययोर्मध्ये ज्ज ज्जा इत्येतावादेशौ वा स्याताम्। भवति=होज्जइ होज्जेइ होज्जाइ, पक्षे पूर्वमुक्तम्।

नानेकाचः ॥ ३२२ ॥

वर्त्तमान-भविष्यदनद्यतनयोर्विध्यादिषु चानेकाचो धातोः परतो मध्ये ज्ज ज्जा इत्येतावादेशौ न स्याताम्। भवति हुवज्ज हुवेज्ज हुवज्जा हुवेज्जा। एवमग्रेऽपि पूर्वोक्तलेषु प्रथम-द्वितीय-तृतीयेषु पुरुषेषु एकवचन-द्विवचन-बहुवचनादावप्यवगन्तव्यम्।

न्ति-हेत्था-मो-मु-मा बहुषु ॥ ३२३ ॥

तिङो बहुवचनानामेते आदेशाः स्युः। प्रथमपुरुषबहुवचनस्य न्ति, मध्यमस्य ह इत्था एतौ, उत्तमस्य मो मु म एते इति विवेकः। भवतः भवन्ति=होन्ति हुवन्ति हुवेन्ति हुवज्ज हुवेज्ज हुवज्जा हुवेज्जा होज्ज होज्जा

थास्-सिपोः सि से ॥ ३२४ ॥

धातोः परयोः थास्-सिपोः सि से इत्येतावादेशौ स्याताम्। यथासंख्यं न। भवसि=होसि हुवसि हुवेसि हुवसे हुवेसे। भवथः भवथ—होह होइत्था हुवह हुवेह हुवइत्था हुवेइत्था हुवित्था, 'सन्धा०' (१) इत्यकारलोपो वा।

इट्-मयोर्मिः ॥ ३२५ ॥

इट् मि इत्येतयोः मिः स्यात्।

अत आ मिपि वा ॥ ३२६ ॥

अकारस्य आकारो वा स्याद् मिपि परे। भवामि=होमि हुवामि हुवेमि हुवमि।

इच्च बहुषु ॥ ३२७ ॥

मिपो बहुवचने परे अत इः स्याद् आ च। भवावः भवामः=होमो होमु होम हुवामो हुविमो हुवेमो हुवमो हुवामु हुविमु हुवेमु हुवमु हुवाम हुविम हुवेम हुवम। इति लट्। अथ लिट्—

ईअ भूते ॥ ३२८ ॥

भूते काले धातोः परस्य प्रत्ययस्य ईअ इत्यादेशः स्यात्। बभूव=हुवीअ।

इअं भूते ॥ ३२९ ॥

भूते काले धातोः परस्य प्रत्ययस्य इअं इत्यादेशः स्यात्। बभूव=हुविअं।

एकाचो हीअ ॥ ३३० ॥

भूते काले एकाचो धातोः परस्य प्रत्ययस्य हीअ इत्यादेशः स्यात्। बभूव=होहीअ। त्रीण्यपि रूपाणि प्रथम-मध्यमोत्तमैकवचन-द्विवचन-बहुवचनेष्ववगन्तव्यानि।

उ सु मु विध्यादिष्वेकस्मिन् ॥ ३३१ ॥

विध्यादेरेकवचनस्य क्रमेण उ सु मु इत्येते आदेशाः स्युः। बभूव=होउ हुवेउ हुवउ।

न्तु ह मो बहुषु ॥ ३३२ ॥

विध्यादेर्बहुवचनस्य क्रमेण न्तु ह मो इत्येते आदेशाः स्युः। बभूवुः=होन्तु हुवेन्तु हुवन्तु। बभूविथ=होस हुवेस हुवस=बभूव=होह हुवे

हुवह, हविधानं इत्थ(त्था)बाधनार्थम्। बभूव-होमु हुवेमु हुवमु। बभूविम=होमो हुवेमो हुवमो। मोविधानं मु-मयोर्बाधार्थम्। इति लिट्। अथ लुट्-

धातोर्भविष्यति हिः ॥ ३३३ ॥

भविष्यति काले धातोः परे हिः स्यात्। भविता=होहिइ हुवेहिइ हुवहिइ।

एच्च क्त्वा-तुमन्-तव्य-भविष्यत्सु ॥ ३३४ ॥

एषु अत एत्वं स्यात्, चादिश्च। हुविहिइ हुवेहिए हुवहिए हुविहिए होज्ज होज्जा हुवेज्ज हुवज्ज हुवज्जा होज्जहिइ होज्जेहिइ होज्जाहिइ होउ हुवेउ हुवउ। भवितारः=होहिंति हुवेहिंति हुविहिंति हुवहिंति होन्तु हुवेन्तु हुवन्तु। भवितासि=होहिसि हुवेहिसि हुवहिसि हुवेहिसे हुवहिसे होसु हुवेसु हुवसु। भवितास्थ=होहिहा हुवेहिह हुवहिह होह हुवेह हुवह।

उत्तमे स्सा हा च ॥ ३३५ ॥

भविष्यत्युत्तमे परे धातोः परौ स्सा हा इत्येतौ स्याताम्। चात् हिः।

मिना स्सं वा ॥ ३३६ ॥

भविष्यति मिना सह धातोः परः स्सं वा स्यात्। भविष्यामि=होस्सामि हुवेस्सामि हुवस्सामि होहामि हुवेहामि हुवहामि हुवाहामि होहिमि हुवेहिमि हुवाहिमि हुवहिमि होस्सं हुवेस्सं हुवस्सं होमु हुवेमु हुवामु हुवमु।

मो-मु-मैर्हि-स्सा-हित्था ॥ ३३७ ॥

भविष्यति मो-मु-मैः सह हिस्सा हित्था इत्येतावादेशौ वा स्याताम्। भवितास्मः=होहिस्सा हुवेहिस्सा हुविहिस्सा हुवाहिस्सा हुवहिस्सा होहित्था हुवेहित्था हुविहित्था हुवाहित्था हुवहित्था होस्सामो हुवेस्सामो हुविस्सामो हुवस्सामो होहामो हुवेहामो हुविहामो हुवाहामो हुवहामो होहिमो हुवेहिमो हुविहिमो हुवाहिमो हुवहिमो होमो हुवेमो हुविमो हुवामो हुवमो। इति लुट्।

अथ लृट्। भविष्यति=होहिइ हुवेहिइ हुवहिय हुवेहिए हुवहिए। भविष्यन्ति=होहिन्ति हुवेहिन्ति हुवहिन्ति। भविष्यसि=होहिसि हुवेहिसि हुवहिसि हुवेहिसे हुवहिसे। भविष्यथ=होहिह हुवेहिह-हुवहिह होहित्थ हुवइत्थ हुवित्थ। भविष्यामि=होस्सामि हुवेस्सामि

हुवाहिमि हुवहिमि होस्सं हुवेस्सं हुवस्सं। भविष्यामः = होहिस्सा हुवेहिस्सा हुविहिस्सा हुवाहिस्सा हुवहिस्सा होहित्था हुवेहित्था हुविहित्था हुवाहित्था हुवहित्था होस्सामो हुवेस्सामो हुविस्सामो हुवस्सामो होहामो हुवेहामो हुविहामो हुवाहामो हुवहामो होहिमो हुवेहिमो हुविहिमो हुवाहिमो हुवहिमो होस्सामु हुवेस्सामु हुविस्सामु हुवस्सामु होहामु हुवेहामु हुविहामु हुवाहामु हुवहामु होहिमु हुवेहिमु हुविहिमु हुवाहिमु हुवहिमु होस्साम हुवेस्साम हुविस्साम हुवस्साम होहाम हुवेहाम हुविहाम हुवाहाम हुवहाम होहिम हुवेहिम हुविहिम हुवाहिम हुवहिम। इति लृट्।

अथ लोट् – भवतु = होउ हुवेउ हुवउ। भवन्तु = होंतु हुवेन्तु हुवन्तु। भव = होसु हुवेसु हुवसु। भवत = होह हुवेह हुवह। भवानि = होमु हुवेमु हुवामु हुवमु। भवाम = होमो हुवेमो हुवामो हुविमो हुवमो। इति लोट्। लोट्वद् लङ्-लिङाशीर्लिङः।

अथ लुङ् – अभूत् = हुवीअ हुविअं होहीअ, एवं पुरुष – वचनेषु। लृङ् लट्वत्।

प्रादेर्भवः ॥ ३३८ ॥

प्रादेः परस्य भुवो भव इत्यादेशः स्यात्। प्रभवति = पभवइ पभवए पभवेइ पभवेए। उद्भवति उब्भवइ। प्रतिभवइ पडिभवइ, 'प्रतिसर०' (३३) इति तस्य डः। खाद्द भक्षणे।

खादि-धाव्योः खा-धौ ॥ ३३९ ॥

अनयोः खा धा इत्येतौ क्रमेण स्यातां वर्त्तमाने भविष्यति विध्यादीनामेकवचनेषु च। खादति खाइ। चखाद खाहीअ। खादिता खाहिइ खादिष्यति खाहिइ। खादतु खाउ। एवं लङ्-लिङाशीर्लिङः। अखादीत् खादीअं खादीअ। लृङ् लङ्वत्।

क्षियो झिज्जः ॥ ३४० ॥

'क्षि क्षये' अस्य झिज्ज इत्यादेशः स्यात्। क्षयति झिज्जइ झिज्जए छिज्ज-भिज्जावप्येके। व्रज गतौ।

ञ्चो व्रज-नृत्योः ॥ ३४१ ॥

अनयोरन्तस्य ञ्चः स्यात्। व्रजति वच्चइ वच्चेइ वच्चए। व्रजिता वच

वेष्टेश्च ॥ ३४२ ॥

अन्तस्य ढः स्यात् । ठापवादः । वेष्टते वेढइ वेढए वेढेइ वेढेए । 'क्थेर्ढः' (३५८) इति पूर्वसूत्रान्तर्गतं न कृतम्, 'उत्समोर्ल्लः' (३४३) इत्युत्तरसूत्रेऽनुवृत्त्यर्थम्, अन्यथा क्थिरपि ल्लविधानेऽनुवर्त्तेत ।

उत्समोर्ल्लः ॥ ३४३ ॥

एतयोः परस्य वेष्टेरन्तस्य ल्लः स्यात् । उद्वेष्टते उव्वेल्लइ । संवेष्टते संविल्लइ । स्फुट विकसने ।

स्फुटि-चल्योर्वा ॥ ३४४ ॥

अनयोरन्तस्य द्वित्वं वा स्यात् । स्फोटते फुट्टइ फुटइ, भौवादिक-तौदादिकौ गृह्येते स्फुटि-चली इह । पट गतौ ।

पटेः फलः ॥ ३४५ ॥

स्पष्टम् । पटति फलइ । जृभि गात्रविनामे ।

जृभो जंभाअ ॥ ३४६ ॥

जृभि इत्यस्य जंभाअ इत्यादेशः स्यात् । जृम्भते = जंभाअइ जंभाएइ जंभाअए जंभाएए । जृम्भिता = जंभाअहिइ जंभाएहिइ जंभाअहिए जंभाएहिए । जल्प व्यक्तायां वाचि ।

जल्पेर्लो मः ॥ ३४७ ॥

जल्पेर्लस्य मः स्यात् । जल्पति जंपइ । घुण भ्रमणे ।

घुणो घोलः ॥ ३४८ ॥

घुणेर्घोल इत्यादेशः स्यात् । घूर्णति घोलइ घोलए, भ्वादि तुदादि । मील निमेषणे ।

प्रादेर्मीलः ॥ ३४९ ॥

प्रादेः परस्य मीलो लस्य द्वित्वं वा स्यात् । प्रमीलति = पमिल्लइ पमीलइ पमिल्लए पमीलए पमिल्लेइ पमीलेइ पमील्लेए पमीलेए । जि जये ।

श्रु-हु-जि-लू-धुवां ण्णोऽन्त्ये ह्रस्वः ॥ ३५० ॥

एषामन्त्ये ण्णः स्यात्, दीर्घस्य ह्रस्वश्च स्यात् । जयति जिण्णइ । जिगाय जिण्णीअ ।

धावु गति-शुद्ध्योः । धावति धावते धाइ । दधाव दधावे धाहीअ । धाविता धाहिइ । धावतु धावतां धाउ ।

[illegible]

काशोवासः ॥ ३५१ ॥

अवात् परस्य काशेर्वास इत्यादेशः स्यात्। अवकासते ओवासइ। अवादिति किम्? कासते कासइ। ग्रसु ग्लसु अदने।

ग्रसेर्विसः ॥ ३५२ ॥

अस्य विस इत्यादेशः स्यात्। ग्रसते विसइ। गाहू विलोडने।

अवाद् गाहेर्वाहः ॥ ३५३ ॥

अवात् परस्य गाहेर्वाह इत्यादेशः स्यात्। अवगाहते ओवाहइ। अवादिति किम्? गाहते गाहइ। वृषु मृषु सेचने।

वृष-कृष-मृष-हृषामृतोऽरिः ॥ ३५४ ॥

एषां ऋतः अरिः इत्ययमादेशः स्यात्। वर्षति वरिसइ। मर्षति मरिसइ। कृषि विलेखने इति भौवादिकस्यैव ग्रहणम्, न तौदादिकस्य, वृषादिसाहचर्यात्। हृषु अलीके। हर्षति हरिसइ। वृधु वृद्धौ।

वृधेर्ढः ॥ ३५५ ॥

अन्तस्य स्यात्। वर्धते वड्ढइ, 'ऋतोऽद्' (१२०) इत्यकारः। ञित्वरा सम्भ्रमे।

त्वरस्तुवरः ॥ ३५६ ॥

स्पष्टम्। त्वरते तुवरइ तुवरए। चल कम्पने। चलति चल्लइ चलइ, 'स्फुटि-चल्योर्वा' (३४४) इति वा द्वित्वम्। पत्लृ गतौ।

शद्लृ-पत्योर्डः ॥ ३५७ ॥

अनयोरन्तस्य डः स्यात्। पतति पडइ। शद्लृ शातने। शीयते सडइ। क्वथे निष्पाके।

क्वथेर्ढः ॥ ३५८ ॥

अन्तस्य स्यात्। क्वथति कढइ। म्लै हर्षक्षये।

म्लै वा-वाऔ ॥ ३५९ ॥

अस्य वा वाअ इत्येतावादेशौ स्याताम्। म्लायति वाइ वाअइ। ध्यै चिन्तायाम्।

ष्ठा-ध्या-गानां ठाअ-झाअ-गाआः ॥ ३६० ॥

एषामेते क्रमेण स्युः।

ठा-झा-गाश्च वर्त्तमान-भविष्यद्-विध्याद्येकवचनेषु ॥ ३६१ ॥

एषु ष्ठा-ध्या-गानां ठा झा गा इत्येते आदेशाः स्युः। [illegible]

ध्यायति=झाअइ झाइ। दध्यौ=झाइअं झाहीअ। ध्याता=झाअहिइ झाहिइ एवं लृट्। ध्यायतु=झाअउ झाउ। अध्यासीत्=झाइअं झाईअ। अ 'ठाझा-गाश्चालुङि' इत्येव सूत्रयितुं युक्तम्। गै शब्दे। गायति गाअ गाइ, पूर्ववत्। घ्रा गन्धोपादाने।

जिघ्रतेः पा-पाओ ॥ ३६२ ॥

अस्य पा पाअ एतौ स्याताम्। जिघ्रति पाइ पाअइ। जघ्रौ पाहीअ पाईअ पाइअं। ध्मा शब्दा-ऽग्निसंयोगयोः।

उद्ध्मो धूमा ॥ ३६३ ॥

उदः परस्य धमतेः धूमा इत्यादेशः स्यात्। उद्धमति उद्धूमाइ ष्ठा गतिनिवृत्तौ। तिष्ठति ठाअइ ठाइ, ध्यावत्। स्मृ चिन्तायाम्।

स्मरतेर्भर-सुमरौ ॥ ३६४ ॥

अस्य भर सुमर इत्येतौ स्याताम्। स्मरति भरइ सुमरइ। सृ गतौ।

ऋतोऽरः ॥ ३६५ ॥

धात्वन्तऋकारस्य अरः स्यात्। सरति सरइ। श्रु श्रवणे। शृणोति सुणइ। शुश्राव सुणीअ सुणिअं।

श्वादीनां त्रिष्वप्यनुस्वारवर्जं हिलोपश्च वा ॥ ३६६ ॥

श्रु वचि नमि रुदि दृशि विदि इत्येतेषां प्रथम-मध्यम-उत्तमपुरुषेषु परेषु सोच्छं वोच्छं गच्छं रुच्छं दच्छं वेच्छं इति क्रमेण आदेशाः स्युः, अनुस्वारवर्जं हिलोपश्च वा। श्रोता=सोच्छिहिइ सोच्छिइ सोच्छइ सोच्छहिइ सोच्छेहिइ सोच्छेइ सोच्छिहिए सोच्छिए सोच्छए सोच्छ-हिए सोच्छेहिए सोच्छेए। श्रोतारः=सोच्छहिंति सोच्छिंति सोच्छंति सोच्छिहिंति सोच्छेहिंति सोच्छेंति। श्रोतासि=सोच्छिसि सोच्छिहिसि सोच्छेसि सोच्छेहिसि सोच्छसि सोच्छहिसि सोच्छिसे सोच्छिहिसे सोच्छेसे सोच्छेहिसे सोच्छसे सोच्छहिसे। श्रोतास्थ=सोच्छिहिह सोच्छेहिह सोच्छहिह सोच्छिह सोच्छेह सोच्छह।

कृ-दा-श्रु-वचि-गमि-रुदि-दृशि-विदिरूपाणां काहं दाहं सोच्छं वोच्छं गच्छं रुच्छं दच्छं वेच्छं ॥ ३६७ ॥

एषामेते क्रमेण स्युः भविष्यत्युत्तमैकवचने। श्रोतास्मि=सोच्छं सोच्छिस्सामि सोच्छेस्सामि सोच्छस्सामि सोच्छिहामि सोच्छेहामि [illegible]

सोच्छाहामि सोच्छामि सोच्छहिमि सोच्छमि सोच्छेस्सं सोच्छस्सं श्रोतास्मः=सोच्छिहिस्सा सोच्छेहिस्सा सोच्छाहिस्सा सोच्छिहित्था सोच्छेहित्था सोच्छाहित्था सोच्छहित्था सोच्छिस्सामो सोच्छेस्सामो सोच्छस्सामो सोच्छिहामो सोच्छेहामो सोच्छाहामो सोच्छहामो सोच्छिहिमो सोच्छिमो साच्छेहिमो सोच्छेमो सोच्छाहिमो सोच्छामो सोच्छहिमो सोच्छमो। श्रोष्यति=सोच्छिहिइ इत्यादि। प्रथमे मध्यमस्यैकवचने च लुड्वत्। बहुवचने तु श्रोष्यथ=सोच्छिहिह सोच्छिह सोच्छेहिह सोच्छेह सोच्छहिह सोच्छह सोच्छिहित्थ सोच्छित्थ सोच्छेहित्थ सोच्छेइत्थ सोच्छहित्थ सोच्छइत्थ। मिपि लुट्वत्, मवि च। मु-मयोस्तु यत्र मो इति तत्र मु-मौ प्रत्येकं प्रयोज्यौ। शृणोतु सुणाउ शृण्वन्तु सुणंतु। शृणु सुणसु। शृणुत सुणह। शृणोमि सुणमु शृणमः सुणमो। दृशिर् प्रेक्षणे। इर् इत्।

दृशेः पुलअ-णिअक्क-अवक्खाः ॥ ३६८ ॥

त्र्यक्षरा आदेशाः स्युः। पश्यति पुलअइ णिअक्कइ अवक्खइ। ददर्श पुलईअ णिअक्क(क्की?)अ अवक्खीअ। द्रष्टा दच्छिहिइ इत्यादि वोच्छवत्। कृषि विलेखने। कर्षति करिसइ। गम्लृ गतौ गच्छति गमइ। गन्तास्मि गच्छं इत्यादि। इति भ्वादिः।

अद भक्षणे।

शेषाणामदन्तता ॥ ३६९ ॥

लुप्तानुबन्धानां शेषाणामकारान्तत्वं स्यात्। अत्ति अअइ। हन हिंसा-गत्योः।

हन्तेर्म्मः ॥ ३७० ॥

हन्तेर्नस्य म्मः स्यात्। हन्ति हम्मइ। वच परिभाषणे। वक्ति वअइ। वक्ष्यामि वोच्छं इत्यादि सोच्छवत्। विद ज्ञाने। वेत्ति वेअइ। वेत्स्यामि वेच्छं। अस भुवि। अस्ति अत्थि। सन्ति असन्ति।

असेर्लोपः ॥ ३७१ ॥

असो लोपः स्यात् थास्-सिपोः परयोः। असि सि। थासोऽनुवृत्तिर्भाव-कर्मणोः सफला। स्थ त्थ।

मि-मो-मु-मानामधो हश्च ॥ ३७२ ॥

असेः परेषां मि-मो-मु-मानामधो हः स्यात्, असेश्च लोपः। अस्मि

भूते निपातः। बभूव आसि। मृजूष् शुद्धौ।

मृजेर्लुभ-पुसौ ॥ ३७४ ॥

ह्यक्षरौ स्याताम्। मार्ष्टि लुभइ पुसइ 'सुप' इति पाठे सुपइ। रुदिर् अश्रुविमोचने।

रुदेर्वः ॥ ३७५ ॥

रुदेर्दस्य वः स्यात्। रोदिति रुवइ। रुदिष्यामि रुच्छं, वोच्छवत् इत्यदादयः।

हु दानादनयोः। जुहोति हुणइ, 'श्रु-हु-जि०' (३५०) इति णः। ञिभी भये।

भियो भा-बीहौ ॥ ३७६ ॥

भा बीह इत्येतावादेशौ स्याताम्। बिभेति भाइ बीहइ। पृ पालन-पूरणयोः। पिपर्त्ति परइ। डुभृञ् धारण-पोषणयोः। बिभर्त्ति भरइ माङ् माने।

निरो माङो माणः ॥ ३७७ ॥

निरः परस्य माङो माण इत्यादेशः स्यात्। निर्मिमीते णिम्माणइ निरः किम्? मिमीते माइ। डुदाञ् दाने। ददाति दाइ। दातास्मि दाहं डुधाञ् धारण-पोषणयोः।

श्रदो धो दहः ॥ ३७८ ॥

अदः परस्य धो दह इत्यादेशः स्यात्। श्रद्दधाति सद्दहइ। श्र इति किम्? धाइ। विजिर् पृथग्भावे।

उदो विजः ॥ ३७९ ॥

उदः परस्य विजेर्जस्य वः स्यात्। उद्वेविक्त उद्वेवेक्ति उव्विव्वइ ऋ सृ गतौ। इयर्त्ति अरइ। ससर्त्ति सरइ। इति ह्वादयः।

दिवु क्रीडा-विजिगीषा-व्यवहारद्युति-स्मृति-मोद-मद-स्वप्न-कान्ति गतिषु। दीव्यति दिवइ। नृती गात्रविनामे। नृत्यति णच्चइ। त्रसि उद्वेगे

त्रसेर्वज्जः ॥ ३८० ॥

स्पष्टम्। त्रस्यति वज्जइ। व्रीड चोदने लज्जायां च। व्रीड्यति वीलइ षूङ् प्राणिप्रसवे। सूयते सूइ। दूङ् परितापे।

स्पष्टम्। दूयते=दूमइ दूमए दूमेइ दूमेए। शो तनूकरणे। श्यति सोइ। दो अवखण्डने। द्यति दोइ। जनी प्रादुर्भावे। जायते जणइ। पद गतौ।

पदः पालः ॥ ३८२ ॥

आदेशः स्यात्। पद्यते पालइ। वुध अवगमने।

युधि-बुध्योर्झः ॥ ३८३ ॥

एतयोर्धस्य झः स्यात्। बुध्यते बुज्झइ। युध सम्प्रहारे। युध्यते जुज्झइ। सृज विसर्गे। सृज्यते सज्जइ। शुष शोषणे।

रुषादीनां दीर्घः ॥ ३८४ ॥

रुषादीनां दीर्घः स्यात्। शुष्यति सूसइ। तुष प्रीतौ। तुष्यति तूसइ। दुष वैकृत्ये। दुष्यति दूसइ। क्रुध कोपे।

क्रुधेर्झूरः ॥ ३८५ ॥

स्पष्टम्। क्रुध्यति झूरइ। रुष रोषे। रुष्यति रूसइ। गृधु अभिकाङ्क्षायाम्। गृध्यति गधइ। इति दिवादयः।

षुञ् अभिषवे। सुनोति सुअइ। चिञ् चयने।

चिञश्चिणः ॥ ३८६ ॥

चिञः चिण इत्यादेशः स्यात्। चिनोति चिणइ। शक्ल शक्तौ।

शकादीनां द्वित्वम् ॥ ३८७ ॥

शकादीनां द्वित्वं वा स्यात्। शक्नोति सक्कइ। पक्षे—

शकेस्तर-चअ-तीराः ॥ ३८८ ॥

अस्य त्र्यक्षरास्त्रय आदेशाः स्युः। शक्नोति तरइ चअइ तीरइ। अशू व्याप्तौ सङ्घाते च। अश्नुते असइ। ञिधृषा प्रागल्भ्ये। धृष्णोति धसइ। इति स्वादयः।

तुद व्यथने। तुदति तुअइ। णुद प्रेरणे।

णुदेर्लोणः ॥ ३८९ ॥

णुदेर्लोण इत्यादेशः स्यात्। नुदति लोणइ। 'णोल्ल' इति पाठे णोल्लइ। कृष विलेखने। कृषति कसइ, 'वृष-कृष-०' (३५४) इति अरिस्तु न, वृषसाहचर्याद् भौवादिकस्यैव ग्रहणात्। ओविजी भये। उद्विजति उव्विवइ, 'उदो विजः' (३७९) इति वः। टुमस्जो शुद्धौ।

बुड-खुप्पौ मस्जेः ॥ ३९० ॥

[ मस्जेः बुड खुप्प इत्येतावादेशौ स्याताम् । ] मज्जति बुडइ खुप्पइ । तृप तृप्तौ ।

तृपस्थिम्पः ॥ ३९१ ॥

तृपेः थिम्प इत्यादेशः स्यात् । तृपति थिम्पइ । घुण भ्रमणे । घूर्णति घोलइ । पृङ् व्यायामे । प्रियते परइ । मृङ् प्राणत्यागे । म्रियते मरइ । सृज विसर्गे । सृजति सअइ । कृती छेदने । कृन्तति कतइ । खिद परिघाते । खिंदति विसूरइ । पिश अवयवे । पिशति पिसइ । इति तुदादयः ।

रुधिर् आवरणे ।

रुधेर्न्ध-म्भौ ॥ ३९२ ॥

रुधेः धस्य न्ध म्भ इत्येतावादेशौ स्याताम् । रुणद्धि रुन्धइ रुम्भइ । भिदिर् विदारणे ।

भिदि-च्छिदोरन्तस्य न्दः ॥ ३९३ ॥

अनयोः दस्य न्दः स्यात् । भिनत्ति भिंदइ । छिदिर् द्वैधीकरणे । छिनत्ति छिंदइ । खिद दैन्ये । खिनत्ति विसूरइ । ओविजी भय-चलनयोः । विनक्ति विअइ । उद्विनक्ति उव्विवइ । इति रुधादयः ।

तनु विस्तारे । तनोति तण्णइ । षणु दाने । सनोति सण्णइ । क्षणु हिंसायाम् । क्षणोति खण्णइ । क्षिणु च – क्षिणोति खिण्णइ । ऋणु गतौ । ऋणोति अण्णइ । तृणु अदने । तृणोति तण्णइ । घृणु दीप्तौ । घृणोति घण्णइ । वनु याचने । वनोति वण्णइ । मनु अवबोधने । मनोति मण्णइ । डुकृञ् करणे ।

कृञः कुणो वा ॥ ३९४ ॥

कृञः कुण इत्यादेशो वा स्यात् । करोति कुणइ करइ ।

कृञः का भूत-भविष्यतोश्च ॥ ३९५ ॥

एतयोरर्थयोः क्त्वा-तुमुन्-तव्येषु च कृञः का इत्यादेशः स्यात् । चकार काहीअ कम्भं (?) [करिष्यति ?] काहिइ । कर्त्तास्मि काहं, दावत् । इति तनादयः ।

डुक्रीञ् द्रव्यविनिमये ।

क्रीञः किणः ॥ ३९६ ॥

वेः क्के च ॥ ३९७ ॥

वेः परस्य क्रीणातेः क्के इत्यादेशः स्यात्। चात् किणः। विक्रीणाति विक्केइ विक्किणइ। लूञ् छेदने। लुनाति लुण्णइ, 'श्रु-हु-जि०' (३५० ) इति अन्त्यस्य णः पूर्वस्य ह्रस्वश्च। कृञ् हिंसायाम्। कृणाति करइ। धूञ् कम्पने। धुनाति धुण्णइ। शृ हिंसायाम्। शृणाति सरइ। पृ पालन-पूरणयोः। पृणाति परइ। मृ हिंसायाम्। मृणाति मरइ। ज्ञा अवबोधने।

ज्ञो जाण-मुणौ ॥ ३९८ ॥

द्व्यक्षरावादेशौ स्याताम्। जानाति जाणइ मुणइ। बध बन्धने। बध्नाति बंधइ। वृङ् सम्भक्तौ। वृणीते वरइ। मृद क्षोदे।

मृदो लः ॥ ३९९ ॥

मृद्नातेः दस्य लः स्यात्। मृद्नाति मलइ। अश भोजने। अश्नाति असइ। पुष पुष्टौ। पुष्णाति पूसइ। ग्रह उपादाने।

ग्रहेर्गेण्हः ॥ ४०० ॥

स्पष्टम्। गृह्णाति गेण्हइ। इति क्र्यादयः।

चुर स्तेये।

णिच एदादेरत आत् ॥ ४०१ ॥

णिच एत् स्यात्, धातोरकारस्य आत् स्यात्।

आवे च ॥ ४०२ ॥

णिचोऽयमपि आदेशः स्यात्। चोरयति चुरेइ चुरावेइ। चिति स्मृत्याम्। चिन्तयति चिंतेइ चिंतावेइ। लक्ष दर्शना-ऽङ्कनयोः। लक्षयति लाखेइ लखावेइ। भक्ष अदने। भक्षयति भाखेइ भखावेइ। गज शब्दे। गाजयति गाजेइ गजावेइ। शठ श्लाघायाम्। शाठयति साठेइ सठावेइ। इति चुरादयः।

भू-हेतुमद् णिच्। भावयति होएइ होआवेइ हुवेइ हुवावेइ। पट-पाटयति फालेइ फलावेइ। जल्पयति जंपेइ जंपावेइ। प्रमीलयति पमिल्लेइ पमिल्लावेइ। अवकाशयति ओवासेइ ओवासावेइ। ग्रासयति विसेइ विसावेइ। अवगाहयति ओगाहेइ ओगाहावेइ। रोषयति रूसेइ रूसावेइ। वर्षयति वरिसेइ वरिसावेइ। वर्धयति वड्ढेइ वड्ढावेइ। त्वरयति तुवरेइ तुवरावेइ। चलयति चल्लेइ चालेइ चल्लावेइ चलावेइ। स्मारयति

